२७६. ततः गुरुस्वप्नविधिनिरूपणम् ४८१-२८२
२७७. गुरुशिष्ययोः स्वप्नदृष्टयोरर्थयोः बलाबलविचारः तयोः बोधसाम्ये स्वप्नसाम्यम् ४८३-४८४
२७८. देवपूजादिषु स्वाप्नेष्वर्थेषु प्रीतिकारिणः शुभत्वं तदितरस्याशुभत्वम् इति गुरोः शिष्याय उपदेशविधानम् ४८५-४८७
२७९. विलीनशङ्केषु स्वप्नोत्थितस्य शुभाशुभत्वाऽभावः ४८८-४८९
२८०. त्रैगुण्यात्मकत्वाद् गुरुशिष्याणां स्वप्नेऽपि वैचित्र्यभागित्वम् ४९०
२८१. दीक्षाकर्मणि तामसस्याधिकारे शङ्कापरिहारः ४९१-४९२
२८२. आयातशक्तिपातस्य दीक्षितस्यापि गुणस्थितेः वैचित्र्यम् ४९३
२८३. सामयकर्माभिधाने गुरुद्वारा शिष्यस्य देवार्चनोपदेशाद्यनन्तरम् अष्टचत्वारिंशत्संस्कारैः द्वादशान्तस्थबोधस्पर्शेन पवित्रीकरणम् ४९४-४९६
२८४ एतावद्भिः संस्कारैरेव आहारादिदोषध्वंसात् पूर्णद्विजत्वापादनम् ४९७
२८५. अष्टचत्वारिंशतः गर्भाधानाद्यस्पृहान्तानां संस्काराणां नाम्ना परिगणनम् ४९८-५०५
२८६. अत्रैव मेखलादिचतुर्दशसंस्काराणाम् उपनयने अन्त्येष्टेश्च पारिव्राज्येऽन्तर्भावः ५०६-५०८
२८७. एवं संस्कृतस्य द्विजस्य रुद्रांशापत्तियोग्यत्वं यत्र गुरुद्वारा प्राणक्रमेण समन्त्राहुतिक्रमेण वा संस्कारयोजनविधानम् ५०९
२८८. तत्र समन्त्राहुतिक्रमे प्रतिसंस्कारं विद्याङ्गपञ्चकेन आहुति-पञ्चकदानस्य ऊहेन विधानम् ५१०
२८९. द्विजतायाः चिद्धर्मत्वाद् द्विजत्वापादनप्रथनाद् रुद्रांशापादनम् ५११
२९०. अत्रार्थे स्वर्णादिधातुपाकदृष्टान्तः ५१२
२९१. द्विजत्वे शान्तात्मत्वं न तु योनिकारणत्वम् ५१३
२९२. अत्रार्थे मोक्षधर्ममुकुटादिशास्त्राणां प्रामाण्यम् ५१४
२९३. विप्रजत्वे नियमादर्शनात् संविद्बाहुल्याभिप्रायेण द्विजयोः सुतस्य स्मृत्यादिषु द्विजतयाऽभिधानम् ५१५-५१६
२९४. अतएव शाम्भवशास्त्रे जात्यादेरनुपदेशः ५१७
२९५. स्मृत्यादिषु तु वामशक्त्यात्मकत्वम् सृष्टिशङ्काफलादिसिद्ध्यर्थं जात्याद्युपदेशः ५१८
२९६. प्रकृते द्विजस्य रुद्रांशापादनेन समयिनः संस्कृतत्वसिद्धिः ५१९
२९७. आपादितरुद्रांशस्य अध्ययनश्रवणादौ सर्वत्र अधिकारः ५२०
२९८. द्विजश्रोतव्यसमयानां गुरुणा श्रावणविधानम् ५२१
२९९. समयाष्टकस्य अष्टधास्वभावत्वात् समयानां देव्यायामलोक्तम् अवादेत्यादिगुरुपदवन्दनान्तम् अष्टाष्टकात्मत्वम्, तत्र शाकिनीनां पूजनीयत्वे स्वभावे वा श्रीगमशास्त्रस्य (५३१-५३२), कौलानां पशुभिः सह वासनिषेधे श्रीमाधवकुलस्य (५३३) संवादानन्तरं गुर्वाद्याराधनविधानम् ५२२-५३९

३००. श्रीमत्त्रैशिरसप्रामाण्याद् यमनियमापेक्षया गुर्वाराधनसक्तेः दृष्टान्तपुरःसरं पूर्णश्रेयस्प्राप्त्यभिधानं गुर्वाराधनविधानञ्च ५४०-५४५
३०१. अत्रैवार्थे श्रीसारशास्त्रसंवादोऽपि तस्मात् परीक्षणानन्तरं गुरुसङ्गोपदेशः ५४६-५४७
३०२. शिवपुरगमनफलायाः देवपितृतृप्तेः गुरुतृप्त्यधीनत्वात् श्राद्धे गुरोरर्चनविधानम् ५४८-५४९
३०३. श्राद्धादौ स्वतन्त्रविधिकस्य निष्फलत्वम् ५५०-५५१
३०४. चण्डीयोग्यद्रव्यशाकिनीवाचकशब्दोच्चारणादिनिषेधः ५५१-५५२
३०५. श्रीगमप्रामाण्यात् स्त्रीणां पूजनीयत्वे तासु विपरीताचरण-जुगुप्सादिनिषेधः त्रिपथादिषु देवमूर्तिपूजनविधानम् ५५३-५५६
३०६. नित्यविधौ देवमूर्तिपूजनवीरद्रव्यजुगुप्सानिषेधा-ऽऽहृतमन्त्रतर्पणादीनां करणीयाकरणीयसमयानां निरूपणं तत्रैकांशे श्रीमदूर्मिसंवादश्च ५५७-५६४
३०७. नैमित्तिकविधावपि समयानामभिधाने श्रीमाधवकुलप्रामाण्यात् कुलात्पतनस्य अकुलीनसंपर्कजन्यत्वाद् विशेषतः शास्त्रान्तरोक्तस्य सर्वदा वर्जनोपदेशः ५६५-५७२
३०८. श्रीमदूर्मिवचनादपि गुर्वागमान्तरसेवकादिभिः संपर्कनिषेधः ५७३-५७४
३०९. अन्येषामपि नैमित्तिकसमयानामभिधानम् ५७५-५८०
३१०. समयानां विलोपे गुरुपृच्छातारतम्योपदेशः ३८१
३११. शिवस्य एव गुरुत्वे तदुक्तानुष्ठानोपदेशः, शिवस्यात्मसंस्कारार्थं गुरोः पुनः प्रह्वीभावकथनं तस्य चोभयाह्लादकारित्वम् ५८२-५८३
३१२. समयिनः गुर्वायत्तैकसिद्धित्वात् तस्मिन् ज्ञानानाश्वस्तचित्तस्य गुरुत्वानधिकारित्वं परित्याज्यत्वञ्च ५८४-५८७
३१३. श्रीमदूर्मिशास्त्रप्रामाण्यात् कौलदीक्षाशास्त्रतत्त्वज्ञान-प्रकाशकस्यैव गुरुत्वाद् वैष्णवादीनां न मुख्यं गुरुत्वम् ५८८-५८९
३१४. अत्रैवार्थे श्रीमदानन्दशास्त्रप्रामाण्यात् गुरोरव्यक्तलिङ्गत्वे लिङ्गधारणस्य लिङ्गिभिर्वर्तनस्य च निषेधः ५९०-५९२
३१५. श्रीमद्रात्रिकुलवचनाद् अशुद्धवासनस्य मोक्षदौर्लभ्यम् ५९३
३१६. श्रीमन्मालासंवादात् मन्त्राणां लेखननिषेधः अङ्गोद्धारविधानञ्च ५९४
३१७. गह्वरनिशिचारादिप्रामाण्याज् जात्यादिहेयाष्टकस्य ग्रहतया परित्यागोपदेशः ५९५-५९६
३१८. कुलगह्वरवर्त्मना जातिपरिग्रहस्यापि हेयेषु परिगणनम् ५९७
३१९. जात्यादीनां ग्रहतयाऽभिधाने स्वरूपाच्छादकत्वस्य नैमित्त्यम् ५९८
३२०. अखंडायां संविदि सङ्कोचकारिणः जात्यादेः ग्रहरूपत्वात् तत्परित्यागे वामाचारानुष्ठानमुखेन श्रीमदानन्दशास्त्रसंवादः ५९९-६०३
३२१. सर्वप्राणिषु कायस्य सर्वदेवमयत्वमित्यभिधानाद् अत्रार्थे नकुलेशादिसंवादश्च ६०४

३२२. अन्यायतनादीनां क्रमेण परित्यागाद् नैवेद्यप्राशनस्य जले तच्छिष्टक्षेपस्य च विधानं तथा च पूर्वदीक्षितजलजैः तद्भुक्तत्वे दोषाभावकथनम् ६०५-६०८
३२३. समयशब्दस्य प्रवृत्तौ अवश्यपालनीयत्वपरतत्त्वसङ्गमज्ञानोपायत्वानां निमित्तत्वम् ६०९
३२४. समयश्रावणानन्तरं दैशिकाय, पुत्रकदीक्षाया अचिकीर्षितव्यत्वे, स्वसंविद्विश्रामणोपदेशः ६१०-६११
३२५. ततः शिष्यात्मनोः सास्त्रकुम्भेन ततः महेश्वरस्य चाभिषेकविधानम् ६१२
३२६. विस्तरसंक्षेपाभ्यां समयदीक्षाप्रकाशनस्य उपसंहारः

## षोडशमाह्निकम्

**कारिका-संख्या**

१. पुत्रकदीक्षाविधिनिरूपणप्रतिज्ञा
२. समयिनः पुत्रकत्वादौ नियोज्यत्वे सामुदायिकयागे अधिवासमण्डलयोश्च विधानम् १-२
३. अत्रैव श्रीपूर्वशास्त्रत्रैशिरससिद्धादिप्रामाण्यात् चक्राणां क्रमेण पञ्चकत्वसंख्यात्वाभिधानम् ३-४
४. सर्वत्र त्रिशूलत्रयस्य मण्डलतया लेख्यत्वं यत्र मध्यदक्षिणवामेति देवीत्रयस्य क्रमेण पूजासंपत्तिः ५-६
५. मण्डलाग्रार्चनविधिनिरूपणम् ७-९
६. तत्र गुरुपङ्क्तौ अस्मद्गुर्वनुसारं गुरुसप्तकस्य पूज्यत्वम् १०
७. ततः शूलमूलादारभ्य शिवान्तम् आधारशक्त्यादीनां पूजनम् ११
८. मध्यशूले वामे दक्षिणे च क्रमेण सद्भावनवात्मरतिशेखराख्येन भैरवेण सह पराऽपरापरापरादेवीत्रयस्य अवस्थानम् १२-१४
९. परादेव्याः सर्वगतत्वे तदधिष्ठानमात्रेण पूर्णतापत्तेः श्रीत्रीशिकाशास्त्रप्रामाण्याद् एकशूलात् लोकपालास्त्रपर्यन्तम् एकात्मत्वेन पूजनम् १५-१८
१०. ततः क्रमात् मातृसद्भावस्य परदेवत्वेन, भैरवाष्टकादिचक्रदेव्यन्तस्य भोगयागेन, सास्त्रलोकपालानां गन्धादिभिः, कुम्भादिपञ्चानाम् अद्वयभावनया पूजनोपदेशः १९-२१
११. अनासादिताद्वयव्याप्तीनां मन्त्रनाडीप्रयोगेण अद्वयपथप्रवेशः २२
१२. तत्र प्राणस्य निर्गमप्रवेशाभ्यां मूलानुसंधानात् प्राणसंमीलने व्याप्तिसंवित्प्रकाशनानन्तरम् अद्वयभावितविशेषपूजाविधानम् २३-२५
१३. अद्वयामृतेन पश्चादेः शिवाद्वयतादृष्टिरेव शुद्धिः २६-२७

| | | |
|---|---|---|
| १४. | निवेद्यानाम् चराचरविभागः | २८ |
| १५. | चरपशूनां अष्टधात्वे उत्तरोत्तरमुत्कर्षः | २९ |
| १६. | शिवोचितहविषः अयोग्यैर्भोग्यैतानिषेधः | ३० |
| १७. | शिवेच्छाविधिचोदितस्यैव हविर्भोगभोग्यता समयित्वञ्च | ३१ |
| १८. | पश्वष्टकलक्षणविधाने अवलोकनादिसंस्कारत्रितयसंस्कृतस्य प्राणाग्निना कलाजापविलापनम् अवलम्ब्य गुरुणा निवेदितस्य पशोः निर्वापितत्वम् | ३२-३५ |
| १९. | निर्वापनविधिक्रमे निर्गमप्रवेशलक्षणाभ्यां दक्षिणवामप्राणाभ्याम् आहृतेन ओजोधातुलक्षणसारेण हृदम्बुजस्थदेवताचक्रतर्पण-विधानम् | ३६-४४ |
| २०. | अनेन विधिना सर्वधातूनां प्राणशक्त्या ज्योतीरूपजीवस्य चाहरणविधानम् | ४५-४६ |
| २१. | आहृतैरेभिः जीवस्य देवीचक्रेण समरसीकरणम् | ४७ |
| २२. | अस्य तर्पणस्य मुख्यत्वं समन्त्रकत्वञ्च | ४८ |
| २३. | मन्त्रजपस्य घटिकार्धे आवृत्तिशतकेन पशोर्निर्वापणसिद्धिः | ४९ |
| २४. | अत्र प्रागभ्यासस्योपादेयत्वम् | ५० |
| २५. | अत्रार्थे चिन्तामणिप्रामाण्यम् | ५१ |
| २६. | परोक्षदीक्षायामपि यागहतस्य तात्कालिकं निर्वापणं वीरपशुपदव्यपदेश्यत्वञ्च | ५२ |
| २७. | अन्यत्र निहतस्य यागादौ निवेदनीयत्वे बाह्यपशुत्वम् | ५३ |
| २८. | सबाह्याष्टधा पशूनाम् अचराणां पुष्पादीनाञ्च क्रमेण फलनिर्देशः | ५४-५५ |
| २९. | शिवानुग्राहकत्वस्य यागोपायकत्वात् शिवपूजया चराचरस्य लाभवत्त्वम् | ५६ |
| ३०. | यागादौ पशुकर्मणि हिसाबुद्धिनिषेधः | ५७ |
| ३१. | यागे पशुमारणस्य तदुपकारकत्वम् | ५८ |
| ३२. | श्रीमृत्युञ्जयोक्तदेववचनप्रामाण्यात् पशुयागस्य पाशच्छेदकत्वाद दीक्षात्वे बहुपशुनिवेदनोपदेशः | ५९-६२ |
| ३३. | षड्जन्मनः पशोरुत्तमत्वम् | ६३ |
| ३४. | दृष्टान्तेनास्य स्वपरोपकारकत्वद्रढनम् | ६४ |
| ३५. | अत्रार्थे आनन्दशास्त्रसंवादात् समयत्यागात् मनुष्यस्य एकजादिसप्तजान्तपशुतया देवीचरुकार्थम् उत्पत्तिः दात्रर्पणद्वारा शिवसायुज्यगामित्वञ्च | ६५-६७ |
| ३६. | पशोरुत्पत्तेः देवीचरुकार्थत्वादस्य अन्यत्र विनियोगनिषेधः | ६८ |
| ३७. | महेशवचनात् सर्वेषां यागे ढौकितानां पशूनाम् अर्पणविधानम् | ६९-७० |
| ३८. | सामस्त्येनाभिधाय अंशांशतः पशुतर्पणाभिधानम् | ७१-७२ |

३९. ततोऽग्नौ दैशिकेन मन्त्रचक्रस्य तर्पणं देवाय विज्ञापनञ्च ७३
४०. विज्ञापनीयस्य विधानम् ७४-७६
४१. ततः मन्त्रकरणपरापरमूर्तिस्मरणप्रणालिकया हस्तयोरर्चनपुरःसरम् एकैकस्य षोढा भिन्नस्य आत्मनः दीपनविधानम् ७७-८०
४२. आगमतात्पर्यमुखेन मण्डलस्थस्य साक्षित्वादिषोढाभिन्नस्यात्मनः पाशप्लोषकत्वम् ८१-८२
४३. कुम्भस्थस्य षोढा भिन्नस्यात्मनः सामान्यवह्निरूपत्वात् शिष्यपाशविधूनकत्वं दीक्षाकर्मनैपुण्यञ्च ८३-८६
४४. षडिन्द्रियचक्रानुसंधिमत्त्वाद् एकस्यैव ज्ञातुः षोढात्वदृष्टान्तेन मण्डलवह्न्यादौ अध्वदीक्षायाम् आत्मनः षोढा भिन्नत्वसिद्धिः ८७-८८
४५. अनुसंधिबलाद् आत्मन्येव शिवात्मतासिद्धिः ८९
४६. अत्रार्थे आगमप्रामाण्यात् महाव्याप्त्या शिवसमत्वं गतस्य मुक्तशब्दव्यपदेश्यत्वम् ९०-९२
४७. पौनःपुन्येन एवंभावनया अयोगोलकन्यायेन शिवात्मभूतस्य गुरोः शिष्यदेहेऽन्यदन्तर्भावनेन मुख्याध्वनः न्यासविधानम् ९३-९६
४८. अध्वमन्त्रयोः शोध्यशोधकयोर्वैचित्र्याभिधाने शोध्यन्यासपूर्वं तदपूर्वञ्च शोधकन्यासयोरभिधानम् ९७-९८
४९. तत्र शोध्यवैचित्र्याभिधाने श्रीपूर्वशास्त्रोक्तक्रमेण देहे अपरपरापरपरेति त्रिविधस्य ललाटरन्ध्रद्वादशान्तत्वञ्च ९९-१००
५०. तत्रापरस्य तत्त्वक्रमाच्चतुरशीत्यङ्गुलत्वम् १०१-१०५
५१. परापरस्य षणनवत्यङ्गुलत्वम् १०६
५२. परस्य अष्टोत्तरशताङ्गुलत्वम् १०७
५३. एवं त्रिविधमाने मयतन्त्रप्रामाण्यम् १०८
५४. व्यस्तत्वेन नवपञ्चचतुरत्र्येकादिभेदात् तत्त्वन्यासाभिधानम् १०९
५५. अष्टोत्तरशताङ्गुलं त्रेधाऽवस्थाने त्रिशिरस्तन्त्रप्रामाण्यम् ११०-११३
५६. भुवनाध्वन्यासाभिधानं तत्र धराप्रधाननियतिपर्यन्तं क्रमेण पुराणां षोडशषट्पञ्चाशदऽष्टाविंशतित्वम् ११४-११९
५७. विद्यादौ तत्त्वत्रये प्रत्येकं पुरद्वयत्वे त्र्यङ्गुलत्वे च श्रीपूर्वशास्त्रसंवादः १२०
५८. अत्रैषां व्यत्ययेनोपदेशस्य अकिंचित्करत्वमथवा अन्योन्यसंज्ञाभिर्व्यपदेश्यत्वञ्च १२१-१२२
५९. पुमादिसदाशिवान्तं पुराणामष्टादशत्वपरिगणनम् १२३-१२७
६०. तत्त्वाऽङ्गुलोभयव्याप्त्या अङ्गुलानां चतुष्षट्चत्वारिंशद्द्वाविंशतिद्वादशक्रमेण पुराणां षोडशषट्पञ्चाशदऽष्टाविंशत्यष्टादशत्वम् १२८
६१. एवमपरे विधौ पुराणाम् अष्टादशोत्तरशतत्वं परापरे द्वादशाङ्गुलाधिक्यं परे च चतुर्विंशत्याधिक्यम् १२९-१३०
६२. विधिद्वयेऽङ्गुलाधिक्ये अङ्गुलांशाधिक्यन्यौन्ययोः नैमित्त्यम् १३१

६३. पराध्वन्यासनिरूपणं तत्र तत्त्वादिप्राधान्ययोगाद् दीक्षायां दशपद्याः क्रमेण न्यासविधानम् १३२-१३४

६४. एकस्मिंश्चतुरङ्गुले, द्वयोरष्टाङ्गुलयोः, त्रिषु दशाङ्गुलेषु एकस्मिन् पञ्चदशाङ्गुले नवपद्याः व्याप्यतया दशमपदस्य व्याप्तृतया च योज्यत्वे धरावर्जं (प्रधानपर्यन्तं) षट्चत्वारिंशदङ्गुलगतेषु परापरपरविधिनिक्षेपाद् द्वादशाङ्गुलव्याप्त्या द्वादशात्मकपदसंपत्तिः १३५-१३७

६५. प्रागुक्तनीत्या मन्त्राध्वनः न्यासेऽपि तुल्यविधित्वम् १३८

६६. वर्णाध्वनः न्यासे त्रयोविंशतौ वर्णेषु विधित्रयनिरूपणम् १३९-१४२

६७. अतएव श्रीपूर्वशास्त्रे तत्त्वेषूक्तस्य वर्णानां विधित्रयस्य पदादावतिदेशः १४३

६८. तत्रत्यातिदेशवाक्यपाठः १४४-१४५

६९. पदमन्त्रयोर्विधित्रितयानन्तरं कलाध्वन्यासे अपरपरापरपरविधित्रयाभिधानम् १४६-१४९

७०. अथ शोध्यषडध्वन्यासानन्तरं मन्त्रात्मनः शोधकन्यास विधानम् १५०

७१. तत्र मन्त्रौघस्य एकाद्येकवीरान्तचतुर्दशविधत्वम् १५१-१५६

७२. श्रीषडर्धसारशास्त्रयोः प्रामाण्यात् तेषाम् अनाख्यसंहारस्थैर्यसर्गमातृसद्भावभेदात् शोधकवर्गस्य सप्ततिसंख्याकत्वम् १५७-१५८

७३. तत्र पारमेश्वर्याज्ञया अभीप्सितमंत्रेणैव दीक्षाविधानोपदेशात् शोध्यन्यासव्यतिरेके दीक्षायाः सप्ततिधात्वम् १५९-१६२

७४. तत्र शोध्यशोधकवैचित्र्याद् दीक्षावैचित्र्याभिधानम् १६३

७५. तत्र शोध्यवैचित्र्याभिधाने त्रिंशतः शोध्यानां सप्तत्या शोधकैः गुणनया जननाद्युज्झितदीक्षायाः शतैकविंशतिसंख्याकत्वम् १६४-१६६

७६. जननादिमय्याः दीक्षायाः सप्तत्यधिकद्वाचत्वारिंशत्शतसंख्याकत्वं द्रव्यविज्ञानभेदात् तद्द्वैविध्ये चत्वारिंशदधिकपञ्चाशीतिशतसङ्ख्याकत्वम् १६७-१६८

७७. भोगमोक्षानुसंधानात् तस्याः द्वैविध्ये तत्र भोगस्य शुभाशुभतया द्वैविध्याद् अष्टधात्वम्, गुरुशिष्यभेदात् तस्यापि प्रत्यक्षपरोक्षतया दीक्षाद्वैतम् अनुसंधानभेदश्च १६९-१७३

७८. श्रीमत्स्वच्छन्दशास्त्रप्रामाण्याद् गुरुशिष्याऽभिन्नत्वेऽपि फलभेदे वासनाभेदस्य नैमित्त्यम् १७४-१७५

७९. ततः शोधकवैचित्र्यनिरूपणे भोगस्य द्वात्रिंशद्भेदवत्त्वम्, समयबीजाख्यमोक्षस्य च एकद्वित्रिक्रमेण भेदाभिधानं तत्र सद्यउत्क्रान्तितः त्रैविध्ये श्रीमद्गह्वरप्रामाण्यम् १७६-१८२

८०. तत्र सप्ततिविधान् दीक्ष्यगुरुशिष्यान् हत्वा स्वभ्यस्तज्ञानसिद्ध्यर्थं गुरुकर्तृकज्ञानोपदेशविधानम् १८३-१८४

८१. तदनुसारिदीक्षाभेदानां मालिनीतंत्रनीत्या संख्याकथनम् १८५-१८६
८२. उक्तानां मुख्यभेदानां संग्रहेणाभिधानम् १८७-१८९
८३. अत्र शोधकशोध्यभेदादितिकर्तव्यताभेदाच्च भेदान्तराणां सद्भावेऽपि असंकीर्णानाम् अशक्यगणनत्वं संकीर्णानाञ्च भूयस्त्वकारित्वात् प्रकारबहुत्वम् १९०-१९२
८४. बुभुक्षवे भूयस्या इतिकर्तव्यतायाः मुमुक्षवे अल्पीयस्याश्च आश्रयणोपदेशः १९३-१९४
८५. अभिनवगुरूणामत्रानभ्युपगमः १९५
८६. तन्मते शास्त्रप्रामाण्यात् क्रमसंवित्त्या गुरोः, तदभेदभावनात् शिष्यस्य, शिवात्मकतासादनात् मुमुक्षवेऽपि भूयसीतिकर्तव्यतानुष्ठानोपदेशः १९६-१९९
८७. अत्र मतान्तरानुपपत्तिः २००
८८. संस्क्रियागणावर्तनात् जीवनकाले मुमुक्षोः क्रियाबहुत्वं ततः सबीजदीक्षितस्य तस्य समयलोपादौ भोगानन्तरं मोक्षः, निर्बीजदीक्षायां नैवं प्रथेति शास्त्रस्मृतमतस्याप्यौचित्यम् २०१-२०४
८९. अतोऽतिविततत्त्वोद्धरणादिकर्मणः युक्तत्वसिद्धिः २०५
९०. यथेच्छमुपायाश्रयणात् स्वभ्यस्तज्ञानिनः एवंनियमाभावः २०६
९१. प्रकृते शोध्याध्वन्यासपुरस्सरं तत्त्वानुसारं शोधकमन्त्रन्यासस्य विधेयत्वात् शब्दराशिमालिन्योः वर्णक्रमन्यासविधानम् २०७-२०८
९२. पाशात्मकत्वाच्छिवात्मकत्वाच्च एकस्यैव वर्णाध्वनः शोध्यशोधकभावोपपत्तिः २०९
९३. अत्रार्थे स्वायम्भुववृत्तिगतसद्योज्योतिवचनप्रामाण्यम् २१०
९४. अत्रैवार्थे श्रीपूर्वशास्त्रसंवादाद्विलोमक्रमेण धरादिशिवान्तं षट्त्रिंशन्न्यासविधानम् २११-२१५
९५. तत्र परापरविधौ पदानाम् एकोनविंशतित्वे वर्णविभागाभिधानम् २१६-२१८
९६. अपरन्यासविधेः शक्त्यन्तत्वं परन्यासस्य शिवतत्त्वपर्यन्तत्वं तत्र परापरापदानां मन्त्रत्वम् २१९-२२०
९७. तत्तत्तत्त्वव्याप्त्या पिण्डाक्षराणां वर्णसंख्याभेदाद् बीजानां प्रतितत्त्वं व्याप्तृतया न्यासविधानम् २२१-२२२
९८. अन्येषां मते तु पिण्डानामपि बीजवन्न्यासः, अन्यस्तस्यापि शोध्यस्य शोधकन्यासमात्रेण शुद्ध्यभिधानम् २२३
९९. अत्रार्थे न्यासाद् भूतशुद्धिरिति श्रीमन्मृत्युञ्जयादिवचनप्रामाण्यम् २२४
१००. प्रकरणान्तरोक्तस्य प्रकरणान्तरग्राह्यत्वाद् देहाध्वनोः शुद्धितुल्यत्वम् २२५-२२६
१०१. शोध्यानुरोधेन प्रागुक्तवर्णक्रमस्य एतन्न्यायादेव केवलशोधकन्यासेऽपि अपरपरापरपरभेदाद् ग्रहणम् २२७-२३०

१०२. एवं मालिनीतंत्रवाक्यपाठद्वारा शोध्यशोधकभेदात्
तत्त्वक्रमन्यासस्य तद्विपरीतस्य चाभिधानम् २३१-२३५
१०३. परापरदेव्याः स्वतन्त्रन्यासनिरूपणम् २३६
१०४. शिष्यतनौ व्याप्तृतया योज्यत्वाद् देवीद्वयस्य न्यासानभिधानम् २३७
१०५. एवं शोधकस्य न्यासे मुक्तिरूपफलाविशेषेऽपि
ध्यानबलकर्मक्षयरूपप्रक्रियावैशिष्ट्यम् २३८-२३९
१०६. अणोरनेकशरीरगतत्वेन भोक्तृत्वे मनोवृत्तेः
देहानुसंधाननियतत्वाद् इन्द्रियज्ञानस्य च
नियतवृत्तित्वात् तद्गतभोग्यज्ञानस्य चाननुसंधानम् २४०-२४२
१०७. योगादितः नैर्मल्यासादनानन्तरमेव मनसोऽतीन्द्रियार्थज्ञानम् २४३
१०८. निर्मलमनोवत् प्रत्ययदीक्षायां तत्तद्भुवनदर्शनम् २४४
१०९. जननादिवर्जितदीक्षायां केवलं शोधकन्यासे चोभयत्र
शिष्यस्य शोधकसंपुटितनाम्नः परिकल्पनम् २४५-२४७
११०. ततः जननादिवर्जितदीक्षायां द्रव्ययोगेन आहुतिविधानम् २४८
१११. विज्ञानदीक्षायां शोधकमंत्रसंजल्पबलात् निर्विकल्पतापत्ति-
पर्यन्तं शिष्यभावनम् २४९
११२. संजल्पात्मनः मन्त्रस्य विमर्शयोगित्वाद् अविकल्पत्वसंपत्तिः २५०-२५१
११३. श्रीसारशास्त्रप्रामाण्याद् अर्थालोचनस्य परामर्शस्वभावं
मन्त्रशक्तित्वम् २५२-२५३
११४. परामर्शस्य शुद्धाशुद्धतया द्वैविध्याद् वैष्णवादीनां
शैवादीनाञ्चक्रमेण अशुद्धशुद्धपरामर्शवत्त्वे
श्रीपौष्करमतङ्गादीनां प्रामाण्यम् २५४-२५६
११५. यथापूर्वमुपदेष्टृक्रममवलम्ब्य परमेशितुः प्राथमिकसंजल्पोदये
मायाप्रमातृगतविकल्पस्य संजल्पयोगेऽनवस्थानिरासः विकल्पस्य
शिवात्मत्वोपपत्तिश्च २५७-२६०
११६. शब्दात् शब्दान्तरस्य व्युत्पत्तौ संजल्पासांकर्यात् परामर्शभेदः २६१-२६२
११७. शब्दाद् वृद्धव्यवहाराच्च शब्दान्तरस्य व्युत्पत्तौ
व्यवधानत्वाव्यवधानत्वे २६३
११८. एवं शब्दान्तरविमर्शस्य प्राच्यस्वविमर्शनमयतयैव स्फुरणम् २६४
११९. अर्थविकल्पनवैशिष्ट्यात् मन्त्राणां वैलक्षण्ये आदरः,
बीजपिण्डादीनां संजल्पान्तरतुल्यकक्ष्यत्वनिषेधश्च २६५-२६६
१२०. अतः मंत्रतन्त्रविशारदत्वमेव गुरोर्लक्षणम् २६७
१२१. गुरवे सर्वात्मनः मन्त्रार्थपरिशीलनोपदेशः २६८
१२२. मन्त्रार्थविद्गुर्वभावे मन्त्रतन्मयगुरोराश्रयणविधानम् २६९
१२३. संजल्पान्तरस्य मन्त्रतुल्यत्वे सर्वसाम्यदोषापत्तिः, अंशेनापि
वैषम्ये तदर्थक्रियाऽभावश्च २७०-२७१
१२४. गोमयकीटाभ्यां कीट एवेतिन्यायात् संजल्पान्तरत्वेऽपि

एकार्थक्रियाद्रष्टुः, शिवत्वं भोगापवर्गदसत्यसंजल्पत्वञ्च २७२-२७३
१२५. कीटयोर्भिन्नार्थक्रियामभ्युपगच्छतः ग्रन्थकृतः पक्षान्तरम् २७४
१२६. अत्र मन्त्रार्थभावनाभाजः संजल्पस्य मन्त्रानुगुण्येनैव तत्तच्छब्दस्य कार्यंकरत्वम् २७५
१२७. अत्रार्थे दृष्टान्तः २७६-२७७
१२८. मन्त्रार्थनिष्ठस्य विषापहारित्वादौ श्रीपूर्वशास्त्रप्रामाण्यम् २७८
१२९. पक्षान्तरे मन्त्रवत् संजल्पस्यापि विषनाशे एवं अन्यतमकार्यकारित्वम् २७९
१३०. भासनोपायत्वान्मान्त्रं संजल्पमभ्यस्यतः संजल्पह्रासक्रमेण अविकल्पवस्तुसाक्षात्कारः २८०-२८२
१३१. बहिरपि वस्तुनः निर्विकल्पसंविदधीनसत्ताकत्वम् २८३
१३२. शिवाभेदभाजो गुरोः संजल्पस्य शिष्यमोक्षाभ्युपायत्वम् २८४
१३३. तस्य शिवाभेदमयत्वाद् अविकल्पान्तप्रतीक्षाऽनुपयोगित्वम् २८५
१३४. अत्रार्थे श्रीगमशासनप्रामाण्यम् २८६
१३५. परसंवित्समासन्नत्वादेव मन्त्राणां परसिद्ध्युपायत्वे दृष्टान्तः २८७
१३६. श्रीमालिनीमतान्तर्गतमुनिकार्तिकेययोः संवादात् मन्त्रस्य सबीजयोगाङ्गतालक्षणत्वम् २८८-२९०
१३७. तत्र क्रियाज्ञानभेदाद् द्विविधदीक्षया योगमन्त्रयोरधिकारित्वस्य मुक्तेश्च लाभः २९१-२९२
१३८. मन्त्राभ्यासाद् भोगमोक्षप्रसिद्ध्यर्थं मन्त्राश्रयणादौ देशिकाद् योगिनः दीक्षाग्रहणविधानम् २९३-२९४
१३९. एवं सति मन्त्रज्ञानयोगानाम् अन्यतरत्रापि सिद्धिः २९५
१४०. दीक्षासंस्कृतस्य स्वबलेनैव भोगमोक्षलाभस्य एवमभिधाने नैमित्त्यम् २९६
१४१. दीक्षासंस्कृते समय्यादिनियमस्य स्वबलाधीनत्वम् २९७
१४२. दीक्षायाः केवलाया अपि मोचकत्वात् ज्ञानयोगादि-वन्ध्यस्य भोगमोक्षयोः गुर्वायत्तत्वे दीक्षोचितज्ञानयोग-योजनिकाविधानम् २९८-३०१
१४३. बुभुक्षोः दुष्टकर्मशोधनविधानम् ३०२
१४४. लोकोत्तरभोगेप्सोः शुभकर्मणामपि शोधनविधानम् ३०३
१४५. तत्र द्रव्यज्ञानमय्योः दीक्षयोः यथास्वं द्रव्याऽनुसंधानाभ्यां कर्मशुद्धौ अध्वप्रवेशकारकशुभकर्मोदयः ३०४-३०६
१४६. शुभकर्मोपभोगे योजनिकास्थानासादनम् ३०७
१४७. भाविशुभकर्माप्रक्षयेऽस्य तत्र तत्रोपभोगः ३०८
१४८. मायालयान्तम् अस्य क्वचिदपि दुःखानुपभोगः ३०९
१४९. मायालयाद् योजनिकाबलात् सकले निष्कले वाऽस्य लयः ३१०
१५०. शक्तिपातावसरे गुरुदीक्षाविधेरुपसंहारः

## सप्तदशमाह्निकम्

कारिका-संख्या


१. भैरवतादात्म्यदायिनीप्रक्रियानिरूपणप्रतिज्ञा
२. तत्प्रक्रियाविधौ मलत्रयस्य बाह्वादौ सूत्रग्रन्थितया प्रक्षेपः १-२
३. मलस्य ग्रन्थिरूपताप्रतीतिदार्ढ्याय पाशसूत्रादौ ग्रन्थिकल्पनम् ३
४. बाह्वादौ ग्रन्थिक्षेपे कर्मास्पदत्वादिहेतूनामभिधानम् ४
५. नरशक्तिशिवत्रयस्य भेदबहुत्वाभिधानार्थं सूत्रस्य त्रिस्त्रिगुणीकरणम् ५
६. अत्रैवोपनिषत्प्रक्रियया त्रितयत्वाभिधानम् ६
७. सूत्रक्लृप्त्यनन्तरं तत्त्वशुद्धिनिरूपणोपक्रमे स्वमंत्रेण वागीशीमायायाश्च क्रमेण तर्पणाभिधानम् ७-९
८. आवाहने मातृकावर्णस्य, पूजने मालिनीवर्णस्य उपयोगित्व-प्रदर्शनम् १०-१२
९. आवाहनोपक्रमं पूजाविधानस्यौचित्यम् १३
१०. आवाहनस्य सिद्धभावसंबोधनरूपत्वम् १४
११. नरशक्तिशिवेषु शक्तेरेव मुख्यं पूजाधिष्ठानत्वम् १५
१२. ध्यातृप्रह्वीभाववशाद् ध्येयस्य पूर्णस्वरूपप्रकल्पनाद् धरादिजडानां पूजोपपत्तिः १६-१७
१३. श्रीस्वच्छन्दादिव्याख्याने एतन्न्यायाश्रयणार्थं स्वगुरूपदेशः १८
१४. अभेदमयत्वाच्छिवदशायाः परात्वे पूज्यत्वादेरमुख्यत्वात् तत्स्वातन्त्र्यविजृम्भात्वप्रदर्शनार्थम् आह्वानकर्माद्यूहस्योपदेशः १९-२३
१५. तत्र नुतेः पूर्णतादायित्वं वौषडादेराप्यायकत्वम् २४
१६. बहिः तथात्मतयावभासे कर्मणि तत्कर्मपदाभ्यूहननिषेधः २५-२७
१७. बहिस्तथात्मतानवभासे कर्मपदोहनविधानम् २८
१८. तत्रापि उद्दिष्टेङ्गिनि विधौ अभ्यूहननिषेधः २९
१९. प्रकृते वागीश्याः मायायाः तर्पणानन्तरं धरातत्त्वस्य देहस्थाने अस्त्रताडनानन्तरं गुरुणा शिष्यदेहस्य संहारमुद्रया आत्मीयहृदयानयनम् ३०-३३
२०. अनेन सर्वोत्पत्तिसहिष्णुतोद्गमात् ततः मायायां धरातत्त्वशरीराणां सृष्ट्युपदेशः ३४-३५
२१. तत्र सृष्टौ गर्भाधानभोगभोक्तृत्वतल्लयपाशविच्छेदाख्य-संस्कारचतुष्के पञ्चदशमन्त्राणां परापरापराऽपरात्वेन योजनविधानम् ३६-३८
२२. मन्त्रपञ्चदशकविभागः ३९-
२३. संस्कारचतुष्के परापरापराऽपराभेदेन होमभेदात् धरातत्त्व-पदाभिधानपूर्वकम् आहुतित्रयदानपश्चिमम् उच्चारणविधानम् ४०-४७

२४. ततः पुत्रकप्रतिबन्धनिराकरणार्थं धरातत्त्वपतये गुरोरादेशाभिधानम् ४८-४९
२५. धरातत्त्वशोधनानन्तरं तदन्तरालस्थाध्वपञ्चकस्य अपरा-
मन्त्रेण एकैकध्येन सामस्त्येन वा प्राग्वदूहपूर्वकं शोधनोपदेशः ५०-५१
२६. कलामन्त्रपदवर्णाध्वस्वपि एतस्यैवातिदेशः ५२-५३
२७. अत्रैव केषाञ्चित् तत्त्वाद्यन्यतमे एकाध्वन्येव अन्तर्भावादि-
तराध्वपञ्चकशोधननिषेधः अन्येषां तु शोधनस्य
भावनामयत्वाद् बाह्याहुतिदाननिषेधः इति मतान्तरप्रदर्शनम् ५४-५७
२८. आत्महृत्त्रयनानन्तरं क्रमेण पूर्णमायार्चनविसर्जने ५८-६०
२९. धरायाः जलेन मिश्रणाद् धरायाः शोधनीयत्वापादनम् ६१
३०. तत्तत्पुरातत्त्वमिश्रणाद् उत्तरोत्तरस्य शिवतासादनाच्छुद्धि-
रन्यथा अशुद्धिः ६२
३१. पृथक्त्वात्ममायामलसद्भावे कर्मक्षयेऽपि न मुक्तिः ६३
३२. एवं पूर्वोक्तक्रमेण मिश्रणात् कलातत्त्वशुद्धिः ततः कार्म-
मलात्मकलातत्त्वेन भुजाश्रितपाशसूत्रग्रन्थेः वह्निमन्त्रतेजसा
दाहविधानम् ६४-६६
३३. मान्त्रतेजसा पाशप्लोषकत्वानुगुण्याद् वह्न्याश्रयणम् ६७
३४. पाशप्लोषस्य पारमेशतेजःशेषत्वापादनत्वम् ६८
३५. कर्मपाशहोमे ऊहप्रदर्शनमुखेन मायान्तसंशुद्धौ कण्ठपाशहोम-
विधानं तत्र निर्बीजदीक्षायां समयपाशाख्यबीजदाहाभ्यूहनम् ६९-७२
३६. निर्बीजायां भक्त्यादेरनुष्ठेयत्वं न तु समयत्वम् ७३
३७. एवं विद्याशक्तित्वापन्नमायानियोजनात् शुद्धविद्याक्रमेण
सदाशिवसंशुद्धौ सग्रन्थिशिखाच्छेदाद् आणवमलदाहविधानम् ७४-७५
३८. आगमप्रामाण्याद् आणवपाशस्य मायीयत्वाभिधानौचित्यम् ७६
३९. आणवे दग्धे शिष्यस्नानगुर्वाचमनादेर्विधानम् ७७
४०. ततः शिष्यस्वदेहयोर्योजनिकायां संविदभेदेन मन्त्रवह्न्यभेदेन
च सर्वस्य ध्यानात् सकलनिष्कलशिवाय प्रशान्तकरणेन
पूर्णाहुतिप्रक्षेपे पूर्वोक्तप्रक्रियानुविधानम् ७८-८२
४१. अत्रार्थे त्रैशिरसतन्त्रप्रामाण्यम् ८३-८४
४२. आचार्यस्य मूलाधारादारभ्य क्रमेंण प्राणार्कग्रस्तापानचन्द्रस्य
द्वादशान्तगमनेन उन्मनीभावापत्तिर्नाम करणस्य प्रशान्तत्वम् ८५-८७
४३. शिवादीनेकीकुर्वतः द्वादशान्ते आज्यक्षयपर्यन्तम् अनुद्विग्न-
मवस्थानाभिधानाद् अत्रार्थे श्रीपूर्वशास्त्रसंवादः ८८-९०
४४. परतत्त्वयोजनिकायां शिष्यस्य पुनःपशुभावस्याभावः ९१
४५. भोगदीक्षायां तत्तत्त्वभूमौ तत्संख्यायां वा पूर्णाहुत्यन्तरेण
योजनिकाविधानम् ९२-९३
४६. सबीजनिर्बीजयोः दीक्षयोः निर्बीजायाः शक्तिपातबलोदये
विधानम्, तत्र समयपाशशोधनविधानमपि ९४-९५

४७. निर्बीजदीक्षितस्य सद्यो भोगानन्तरं वा शिवत्वासादनम् ९६
४८. प्राणचारे तत्त्वानां देहे भुवनानां क्रमेण त्यागे निष्कल-तुटिमात्रे आहुतिप्रक्षेपाभिधानादत्रार्थे श्रीमद्दीक्षोत्तरसंवादः ९७-९८
४९. सबीजायां समयशोधननिषेधः ९९
५०. अत्र विशेषेण शिवबोधजलधेः भारूपसृतस्य तत्त्वजालस्य ध्यानाद् यावज्जीवं शिशोः गुरुकर्तृकशुद्धतत्त्वसृष्टिविधानम् १००-१०१
५१. अत्रैव मतान्तरत्रयोद्देशनम् १०२
५२. शिवरूपेण भावितानां तत्त्वानां तत्तत्स्वरूपाकलनपूर्वकं शुद्धत्वप्रदर्शनम् १०३-११०
५३. इन्द्रियाणां निगृहीतत्वमुक्तत्वयोरभिधानात् श्रीमालिनी-विजयोत्तरे शुद्धतत्त्वसृष्ट्या शिष्यस्यापि तन्मयतासादन-सूचना १११-११२
५४. व्यापकत्वे मुक्तत्वं विषयरोधे बन्धत्वमिति इन्द्रियाणां शुद्धाशुद्धविभागे सिद्धयोगीश्वरमतप्रामाण्यं प्रमाणस्तु-तिदर्शनोक्तविद्यागुरुसंवादश्च ११३-११४
५५. अनुक्तमन्त्रासु क्रियासु मायान्तशुद्धौ अपरायाः, सकलान्ते परापरायाः, निष्कले तु पराया इति मन्त्राणां विनियोग-नियमाभिधानम् ११५-११७
५६. भुवनाध्वप्राधान्येन उक्ताया आहुतिसंख्यायाः अध्वपञ्चके प्रत्यध्वम् अधिकावापेनातिदेशः ११८-१२०
५७. तथापि सर्वाध्वसंशुद्धौ विलोमकर्मणा साकम् उक्तानां पूर्णाहुतीनां संख्याभेदाऽभावः १२१
५८. जननादिसमन्वितदीक्षानिरूपणोपसंहारः १२२


## अष्टादशमाह्निकम्

कारिका-संख्या


१. संक्षिप्तदीक्षानिरूपणप्रतिज्ञा
२. अध्वनः मानसध्यानपूर्वकमेतद्दीक्षायाः विधानं जननादि-विहीनत्वाभिधानञ्च १-२
३. तत्त्वशोधने परामन्त्रस्य प्रागुक्तनीत्या मन्त्रान्तराणाञ्च विनियोगः होमसंख्यानां शक्त्यनुसारित्वम् ३-५
४. संशोध्यवर्जे एतद्दीक्षाकर्मणि शास्त्रप्रामाण्यम् ६
५. अत्रापि तत्त्वशोधने मन्त्रभेदाभिधानम् ७
६. स्वभ्यस्तज्ञानिन एवात्र अधिकारित्वम् ८
७. श्रीब्रह्मयामलप्रामाण्यादत्र केवलं यागविस्तरनिषेधः ९

| | | |
|---|---|---|
| | विक्षिप्त (? विस्तृत) विधेः क्रमात्तादात्म्यासादनफलत्वम् | १० |
| | दीक्षोत्तरकैरणादिशास्त्रोक्तसंक्षिप्तविधिनिरूपणोपसंहारः | ११ |


## एकोनविंशमाह्निकम्


| | | कारिका-संख्या |
|---|---|---|
| १. | सद्योनिर्वाणदीक्षानिरूपणप्रतिज्ञा | १ |
| २. | अत्रार्थे तत्क्षणादिव्रजेदन्तग्रन्थेन मालिनीशास्त्रसंसूचनम् | २-३ |
| ३. | प्रोक्तसंसूचने श्रीशंभुनाथवचनप्रामाण्यम् | |
| ४. | आसन्नमरणे शिष्ये शक्तिपातमात्राभेदात् सद्य उत्क्रान्ति-दीक्षया अनुष्ठेयत्वाभिधानम् | ४-६ |
| ५. | अत्रार्थे श्रीमद्गह्वरवचनस्य आसन्नमरणत्वाभिधानपरकत्वे श्रीशंभुनाथविवेचनोपज्ञत्वम् | ७-९ |
| ६. | समयशोधनात्मकपूर्वोक्तविध्यनन्तरं क्षुरिकादिन्यासाभिधानम् | १० |
| ७. | श्रीमालिनीमतप्रामाण्याद् एतन्न्यासविधिः तत्र आहुतिं विनाऽपि समयिनः दीक्षालाभः | ११-१४ |
| ८. | अत्रैव पक्षान्तरे एकत्र ग्रन्थिद्वादशकादौ वा पूर्णाहुतियोगेन यथेष्टधाम्नि नियोजनविधानम् | १५-१६ |
| ९. | अत्रैव श्राद्धादिसंस्कारर्निषेधरूपस्य गह्वरोक्तपक्षान्तरस्य प्राधान्येन निरूपणम् | १७-२० |
| १०. | ईदृग्विधौ श्रीमद्दीक्षोत्तरसिद्धयोगीश्वरीमतयोश्च प्रामाण्यम् | २१-२२ |
| ११. | योगिन एवात्राधिकारः | २३ |
| १२. | कर्णे ब्रह्मविद्यायाः पठनस्य पाठनस्य वाऽनन्तरं तत्त्वशुद्धौ पूर्णाहुत्या अस्य परतत्त्वयोजनम् | २४-२५ |
| १३. | आयोगिनोऽपि गुरोः ज्ञानादिबलादपि सद्य उत्क्रान्तिदायाः करणीयत्वम् | २६ |
| १४. | तत्कालमेव शिष्यप्राणोत्क्रमणात् ज्ञानादिसद्भावेऽपि सद्योनिर्वाणदीक्षायां ब्रह्मविद्याया एव प्राधान्यम् | २७-२८ |
| १५. | क्रियागुर्वादिपरिहारेणापि ब्रह्मविद्याया एवात्र साधनत्वम् | २९-३१ |
| १६. | अध्यापने उपदेशे वाधिकाराभावाद् ब्रह्मविद्यापाठादेव समयिपुत्रकयो रुद्रांशापत्तिः समयदीक्षितत्वञ्च | ३२-३३ |
| १७. | अत्रार्थे दृष्टान्तः | ३४-३५ |
| १८. | प्रकृते स्वयं ब्रह्मविद्यापाठाद् वस्तुस्थित्या मुक्तिः समयलोपाभावश्च | ३६ |
| १९. | अदीक्षिताग्रे शास्त्रोच्चारणनिषेधस्य दीक्षितसदृशानां निषेधे तात्पर्यं न तु जडानाम् | ३७-३८ |

२०. अतः पाषाणप्रायस्य मुमूर्षोरग्रे पाठेन पुद्गलस्य स्वचित्समानजातीयमन्त्रामर्शनसंनिधेः प्रबोधोदयः ३९-४३
२१. अत्रार्थे दृष्टान्तः ४४
२२. एवं प्रबुद्धस्य अदीक्षितत्वाभावे तदग्रे मन्त्रपाठात् तस्माच्च परोपकृतावपि नास्य समयलोपदोषः ४५-४६
२३. अतः 'न दीक्षिताग्रे पठेद्' इति वाक्यस्य सविचिकित्सविषयत्वम् ४७
२४. अतः सविचिकित्सस्य परस्य स्वकञ्चुकानुप्रवेशेनैव प्रबोधने मुक्तिः न तु समयलोपः ४८-४९
२५. श्रुतमात्रमन्त्रलवेऽपि साधके यथोचितप्रायश्चित्ताचरणविधानम् ५०
२६. सद्य उत्क्रान्तिदीक्षायाः गुरुकार्यतायाः समयिपुत्रकयोः कृते स्वयंकार्यतायाश्चाभिधानम् ५१-५३
२७. द्विविधायां कर्तव्यतायां मालिनीमतप्रामाण्यम् ५४-५५
२८. आह्निकार्थोपसंहारः ५६

## विंशमाह्निकम्

कारिका-संख्या

१. सप्रत्ययदीक्षानिरूपणप्रतिज्ञा १
२. तत्र बीजस्य स्वसूतिकरणाक्षमत्वविधिनिरूपणम् २-४
३. तद्वत् मन्त्रादिबलाद् दग्धस्य मलत्रयस्य स्वप्ररोहाभाव इति निर्बीजप्रत्यये श्रीशंभुनाथप्रामाण्यम् ५-६
४. सुदीप्तत्वात् स्थावराणां मोचकत्वादत्र गुरुकृपया बीजयोजनाभिधानमपि ७
५. जपादेरात्मसिद्धितत्वज्ञस्य साचारस्य, न तु निराचारस्य, गुरोरत्राधिकारित्वम् ८-९
६. फलान्तरानर्हत्वाज्ज्ञानस्य स्वप्रत्ययलक्षणत्वे सिद्धामतप्रामाण्यम् १०
७. श्रीतन्त्रसद्भावोक्ततुलाशुद्धिदीक्षाविधानम् ११
८. श्रीपूर्वशास्त्रेऽपि आनन्दादिपरमेश्वरवचनपञ्चकात् तुलादीक्षाविधेः संसूचनम् १२-१३
९. वचनपञ्चकमध्ये उद्भवस्य लाघवात् पार्थिवदेहतिरोधानाधीनत्वम् १४
१०. अधिकारितुलाविध्युभयशेषत्वेन पूर्वोक्तकर्माचरणोपदेशः १५
११. प्रत्ययदातुलाशुद्धिदीक्षोपसंहारः

# संकेत सूची

| | |
|---|---|
| अजड् प्र०सि० | अजडप्रमात्रिकासिद्धि |
| अ०को० | अमरकोश |
| अनु० | अनुत्तराष्टिका |
| ई०प्र० | ईश्वरप्रत्यभिज्ञा |
| ई०प्र०वि० | ईश्वरप्रत्यभिज्ञाविमर्शिनी |
| उ०स्तो० | उत्पलस्तोत्रावली |
| भ०गी० | श्रीमद्भगवद्गीता |
| तं० | तन्त्रालोक |
| तं०सा० | तन्त्रसार |
| ने०तं० | नेत्रतन्त्र |
| प०त्री० | परात्रिशिंका |
| प०सा० | परमार्थसार |
| पा०सू० | पाणिनीसूत्र |
| मा०तं० | मातङ्गतन्त्र |
| मा०वि० | मालिनीविजयतन्त्र |
| वि०भै० | विज्ञानभैरव |
| वृ०आ०उ० | वृहदारण्यक उपनिषत् |
| शि०सू० | शिवसूत्र |
| साम्ब०पं० | साम्बपञ्चाशिका |
| स्प०का० | स्पन्दकारिका |
| स्व०तं० | स्वछन्दतन्त्र |
| ह०स्तो० | हरिमीडेस्तोत्र |

# एकादशमाह्निकम्

⊶ ⁂ ⊷

### * विवेक *

स्वात्ममहाभीमरवामर्शनवशशकलिताध्वसन्तानः ।
भवदुर्गभञ्जनजयोत्साहो जयताज्जयोत्साहः ॥

इदानीमपरार्धेन कलाध्वानमुपक्रमते—

**कलाध्वा वक्ष्यते श्रीमच्छांभवाज्ञानुसारतः ॥ १ ॥**

ननु कलैव नाम किमुच्यते यस्या अप्यध्वपरिभाषा स्यात्?—इत्याशङ्क्याह—

**यथा पूर्वोक्तभुवनमध्ये निजनिजं गणम् ।**
**अनुयत्परतो भिन्नं तत्त्वं नामेति भण्यते ॥ २ ॥**
**तथा तेष्वपि तत्त्वेषु स्ववर्गेऽनुगमात्मकम् ।**
**व्यावृत्तं परवर्गाच्च कलेति शिवशासने ॥ ३ ॥**

---

### * ज्ञानवती *

अपनी आत्मा के महाभयङ्कर रव के आमर्शन से समस्त अध्वसत्ता को खण्डित करने वाले, संसार रूपी दुर्ग को तोड़कर विजय के लिए उत्साहयुक्त जयोत्साह वाले (शिव) की जय हो ॥

अब उत्तरार्ध के द्वारा कला अध्वा का प्रारम्भ करते हैं—

श्रीशम्भुनाथ की आज्ञा के अनुसार कलाध्वा कहा जायगा ॥ १ ॥

प्रश्न—कला ही किसे कहते है जिसकी कि अध्वपरिभाषा होती है?— यह शङ्का कर कहते हैं—

जिस प्रकार पूर्वोक्त भुवन के मध्य (जो) अपने-अपने समूह का अनुगमन करने वाला तथा दूसरे (समूह) से भिन्न (है वह) तत्त्व कहा

तत्त्वेष्विति मध्ये, स्ववर्ग इति वक्ष्यमाणनीत्यैकतत्त्वादिरूपे, व्यावृत्तमिति अश्वादिभ्य ए(इ)व गोत्वम् ॥ ३ ॥

अत्रैव पक्षान्तरं प्रदर्शयति—

**केचिदाहुः पुनर्याऽसौ शक्तिरन्तः सुसूक्ष्मिका ।**
**तत्त्वानां सा कलेत्युक्ता धरण्यां धारिका यथा ॥ ४ ॥**

सुसूक्ष्मिकेति कार्यान्यथानुपपत्त्या परिकल्प्यमाना स्वयमलक्ष्यत्वात् । एवं धरण्या यथा धारिका शक्तिरनुगतास्ति तथा परां काष्ठां प्राप्ताद् बहिर्मुखत्वान्नि-वर्तकत्वेन कलयित्री निवृत्त्याख्यापि—इत्युक्तं स्यात् । एवमबादिमूलान्तं तत्त्व-चतुर्विंशतेरपि भेदव्यवहार एव प्रतिष्ठानेन कलयित्री प्रतिष्ठाख्या शक्तिः । एवमन्यासामपि संकुचितात्मरूपत्वस्य वेदनेन मायीयपदस्योपशमनेन तदतीतत्वेन च कलनात्तदाख्यत्वं च ज्ञेयम् ॥ ४ ॥

न चात्र वस्तुतः पक्षद्वयेऽपि कश्चिद्विशेषोऽस्ति—इत्याह—

**अत्र पक्षद्वये वस्तु न भिन्नं भासते यतः ।**

---

जाता है उसी प्रकार उन तत्त्वों में भी (जो) अपने वर्ग का अनुगामी तथा पर वर्ग से व्यावृत्त है वह शिव शास्त्र में कला कहलाता है ॥ २-३ ॥

तत्त्वों में (= तत्त्वों के) मध्य में । अपने वर्ग में—वक्ष्यमाण नीति के द्वारा एक तत्त्व आदि रूप (वर्ग) में । व्यावृत्त—जैसे कि अश्व आदि से गो व्यावृत्त है ॥ २-३ ॥

इसी विषय में पक्षान्तर भी दिखलाते हैं—

कुछ लोग कहते है कि तत्त्वों के अन्दर जो सुसूक्ष्म शक्ति है वह कला कही गयी है जैसे पृथिवी में धारिका शक्ति ॥ ४ ॥

सुसूक्ष्मिका—कार्य की अन्यथा अनुपपत्ति के द्वारा कल्पित होने वाली, क्योंकि (वह शक्ति) स्वयं अलक्ष्य है । पृथिवी में जैसे धारिका शक्ति (सूक्ष्मरूप से) अनुगत है उस प्रकार पराकाष्ठा को प्राप्त होने के कारण बहिर्मुखता से निवृत्त कराने वाली होने के कारण निवृत्ति नामवाली भी कला है—यह कहना चाहिए । इसी प्रकार जल से लेकर मूल प्रकृति तक चौबीस तत्त्वों में भी भेदव्यवहार की प्रतिष्ठा करने वाली प्रतिष्ठा नामक शक्ति है । अन्य (कलाओं) के भी संकुचित आत्मस्वरूप का ज्ञान कराने, मायीयपद के उपशमन तथा उससे परे होने के रूप में कलना करने से (विद्या शान्ता और शान्त्यतीता) नाम जानना चाहिए ॥ ४ ॥

यहाँ (उपर्युक्त) दोनों पक्षों में वस्तुतः कोई भेद नहीं है—यह कहते हैं—

यहाँ दोनों पक्षों में वस्तु भिन्न नहीं प्रतीत होती क्योंकि (हमारे मत में)

**अनुगामि न सामान्यमिष्टं नैयायिकादिवत् ॥ ५ ॥**

यतः पूर्वस्मिन्नपि पक्षे शक्तिरूपतामपहाय नैयायिकादिवदनुगममात्रलक्षणमेव सामान्यं नाभिप्रेतं तदुभयत्रापि शक्तिरूपत्वानुगमस्याविशेषान्न कश्चिदतिशय इति ॥ ५ ॥

अत्र चान्येषां मतान्तरमप्यस्ति—इत्याह—

**अन्ये वदन्ति दीक्षादौ सुखसंग्रहणार्थतः ।**
**शिवेन कल्पितो वर्गः कलेति समयाश्रयः ॥ ६ ॥**

ननु समयो नामेच्छामात्रनिबन्धनः सङ्केतः स चापारमार्थिकत्वादसत्यः, अत एव समयान्तरमप्युत्सहते, इत्येवं नियमो न स्यात् ?—इत्याशङ्क्याह—

**कृतश्च देवदेवेन समयोऽपरमार्थताम् ।**
**न गच्छतीति नासत्यो न चान्यसमयोदयः ॥ ७ ॥**

अपारमार्थिकत्वागमनेऽसत्यत्वाभावे समयान्तरानुदये च देवदेवकृतत्वं हेतुः, अन्यथा ह्येतत्त्रयमप्यत्र संभाव्यं भवेत्—इति भावः ॥ ७ ॥

नन्वासां च किमनुगन्तव्यं किं वा सुखेन संग्रहणीयम् ?—इत्याशङ्क्याह—

---

नैयायिकों की भाँति अनुगामी को सामान्य नहीं माना गया है ॥ ५ ॥

चूँकि पहले पक्ष में भी शक्तिरूपता को छोड़कर नैयायिक आदि के समान अनुगममात्र लक्षणवाला ही सामान्य मान्य नहीं है । इसलिए दोनों जगह शक्तिरूपता के अनुगम के समान होने से कोई अन्तर नहीं है ॥ ५ ॥

इस विषय में दूसरे लोगों का मतान्तर भी है—यह कहते हैं—

दूसरे लोग कहते हैं कि दीक्षा आदि में सुखसंग्रह के लिए शिव के द्वारा कल्पित वर्ग कला नामक सङ्केत का आधार है ॥ ६ ॥

प्रश्न—समय इच्छा के कारण होनेवाला सङ्केत है और वह पारमार्थिक न होने के कारण असत्य है । इसीलिए सङ्केतान्तर भी उत्पन्न होता है । इस प्रकार ऐसा नियम नहीं होगा?—यह शङ्का कर कहते हैं—

देवाधिदेव के द्वारा किया गया सङ्केत अपरमार्थ नहीं होता इसलिये असत्य भी नहीं है और न अन्य सङ्केत का उदय होता है ॥ ७ ॥

(सङ्केत के) अपारमार्थिक न होने, असत्य न होने और सङ्केतान्तर के अनुदय का कारण (उस कलाशक्ति का) देवदेव के द्वारा किया जाना ही है । अन्यथा ये तीनों (= अपारमर्थिकता, असत्य और सङ्केतान्तर का उदय) यहाँ सम्भव होते हैं ॥ ७ ॥

**निवृत्तिः पृथिवीतत्त्वे प्रतिष्ठाव्यक्तगोचरे ।**
**विद्या निशान्ते शान्ता च शक्त्यन्तेऽण्डमिदं चतुः ॥ ८ ॥**

अण्डमिदं चतुरिति, इदमेव निवृत्त्यादिकलासमव्याप्तिकमण्डचतुष्टयम्—इत्यर्थः । तदुक्तम्—

'पार्थिवं प्राकृतं चैव मायीयं शाक्तमेव च ।
इति संक्षेपतः प्रोक्तमेतदण्डचतुष्टयम् ॥'
(मा० वि० २।४९) इति ।

'शक्त्यन्ते' इत्यनेन व्यापिनीपदादौ कलान्तरस्यावकाशोऽस्ति—इति प्रकाशितम् ॥ ८ ॥

तदाह—

**शान्तातीता शिवे तत्त्वे कलातीतः परः शिवः ।**

'शिवे तत्त्वे' इत्यर्थादाक्षिप्तशक्तितत्त्वे सर्वाविभागात्मनि षट्त्रिंशे यस्य समनन्तरमेव सकलसङ्कल्पनाकलङ्ककवलीकाराभिद्योतनायोपदेश्यजनापेक्षया सप्तत्रिंशादित्वेन कल्पितमपि रूपान्तरं लक्ष्यते । अत एवोक्तम्—'कलातीतः परः

---

प्रश्न—इन (कला शक्तियों) में से किसका अनुगमन करना चाहिए अथवा किसका सुखपूर्वक संग्रह करना चाहिए?—यह शङ्का कर कहते हैं—

निवृत्ति को पृथिवीतत्त्व में प्रतिष्ठा को (जल से लेकर) अव्यक्त तक, विद्या को माया तक और शान्ता कला को शक्ति तक मानना चाहिए । (इस प्रकार) यह चार अण्ड हैं ॥ ८ ॥

यह चार अण्ड है = यही निवृत्ति आदि कलाओं से व्याप्त चार अण्ड हैं । वही कहा गया है—

"पार्थिव, प्राकृत, मायीय और शाक्त ये संक्षेप में चार अण्ड कहे गए हैं ।" (मा.वि.तं. २।४९)

'शक्त्यन्त में'—इस कथन के द्वारा व्यापिनी आदि स्तरों में कलान्तर का अवकाश नहीं है—यह प्रकाशित किया गया ॥ ८ ॥

वह कहते हैं—

शिव तत्त्व में शान्त्यतीता (कला रहती) है । परम शिव कलातीत हैं ॥ ९- ॥

शिव तत्त्व में = अर्थात् आक्षिप्त शक्तितत्त्व में । सर्वाविभाग रूप छत्तीसवें (तत्त्व) में, जिसकी इसके बाद समस्त (विश्व के) सङ्कल्पों के कलङ्क के आत्मसंहत करने (की यथार्थता) को बतलाने के लिए उपदेश्य लोगों की दृष्टि से सैंतीसवें रूप

शिवः' इति । 'कलातीतः' इति समग्रकलोज्झितत्वान्निष्कलः इत्यर्थः । अत एव 'परः' इत्युक्तम् ॥

एतदेवोपपादयति—

**नह्यत्र वर्गीकरणं समयः कलनापि वा ॥ ९ ॥**
**युज्यते सर्वतोदिक्कं स्वातन्त्र्योल्लासधामनि ।**

वर्गीकरणं प्रकारद्वयात्मा पक्षः, आद्यः समयोऽन्यः कलना तथातथाविकल्पनम् । अत्र सर्वतः स्वातन्त्र्योल्लासधामत्वं हेतुः ॥ ९ ॥

ननु यद्येवं तत् 'सर्वक्रियाणां कर्ता शिवो विज्ञेयः' इत्युपदेशादौ कथमसौ कलनीयतां यायात् ?—इत्याशङ्क्याह—

**स्वातन्त्र्यात्तु निजं रूपम् बोद्धृधर्मादविच्युतम्॥ १० ॥**
**उपदेशतदावेशपरमार्थत्वसिद्धये ।**
**बोध्यतामानयन्देवः स्फुटमेव विभाव्यते ॥ ११ ॥**
**यतोऽतः शिवतत्त्वेऽपि कलासंगतिरुच्यते ।**

'अतः' इति बोद्धृत्वेऽपि स्वस्वातन्त्र्याद् बोद्धयत्वेन विभावनात्, कलासंगतिरिति तथातथाविकल्पनसंबन्धः—इत्यर्थः । तदुक्तम्—

---

की कल्पना की जाती है । इसीलिए कहा गया—परम शिव कलातीत हैं । कलातीत = संमस्त कलाओं के परित्याग के कारण निष्कल । इसीलिए श्लोक मे 'पर' कहा गया ॥ ९- ॥

इसी को सिद्ध करते हैं—

यहाँ न तो वर्गीकरण है न सङ्केत, न कलना । इसलिए स्वातन्त्र्य के उल्लासस्थल (इस) में सर्वतोदिक्त्व ही सङ्गत होता है ॥ -९-१०- ॥

वर्गीकरण = दो प्रकार का पक्ष, प्रथम सङ्केत और दूसरा कलना = भिन्न-भिन्न प्रकार की विकल्पना । यहाँ सब में स्वातन्त्र्योल्लासधाम होना ही हेतु है ॥ ९ ॥

प्रश्न—यदि ऐसा है तो 'सब क्रियाओं का कर्त्ता शिव को जानना चाहिए ।' इत्यादि उपदेश होने पर यह कैसे कलनीय (= संगत) होगा?—यह शङ्का कर कहते हैं—

चूँकि स्वातन्त्र्य के कारण बोद्धा के धर्म से अप्रच्युत उपदेश और उसके आवेशरूप परमार्थता की सिद्धि के लिए अपने रूप को लाने वाले परमेश्वर स्पष्ट आभासित होते हैं इसलिए शिव तत्त्व में भी कला की सङ्गति कही जाती है ॥ -१०-१२- ॥

इसलिए = बोद्धा होने पर भी अपने स्वातन्त्र्य के कारण बोध्य के रूप में

'स्वातन्त्र्यान्मुक्तमात्मानं स्वातन्त्र्यादद्वयात्मनः ।
प्रभुरीशादिसङ्कल्पैर्निर्माय व्यवहारयेत् ॥'
(ई०प्र० १।५।१६) इति ।

एतच्च बहुप्रकारं प्रागुपपादितमिति न पुनरिहायस्तम् । इयता च कला-स्वरूपमुक्तम् ॥ ११ ॥

ननु भवतु नामैतन्नास्माकमत्र विप्रतिपत्तिः किन्तु शक्त्यन्तमेव यावत् कस्मा-दण्डत्वमुक्तं न तु व्यापिन्यादौ?—इत्याशङ्क्याह—

**अण्डं च नाम भुवनविभागस्थितिकारणम् ॥ १२ ॥**
**प्राहुरावरणं तच्च शक्त्यन्तं यावदस्ति हि ।**

तदिति आवरणम् ॥ १२ ॥

नन्वत्र भुवनानां विभागेनावस्थानमस्ति तत्कारणमण्डरूपमावरणं च नास्ति,—इत्यपूर्वमिदमभिधानम्—इत्याह—

**यद्यपि प्राक् शिवाख्येऽपि तत्त्वे भुवनपद्धतिः ॥ १३ ॥**

---

विभावना होने से । कलसङ्गति—उस-उस प्रकार की विकल्पना से सम्बन्ध । वही कहा गया है—

''परमेश्वर अपने स्वातन्त्र्य के कारण मुक्त अपने को अपने स्वातन्त्र्य से अद्वय रूप अपने को ईश्वर आदि के सङ्कल्पों से निर्मित कर अर्थात् सङ्कल्प के द्वारा अपने को ईश्वर के रूप में स्फुरित कर व्यवहार में ले आते हैं ।' (ई.प्र. १।५।१६)

यह पहले अनेक प्रकार से कहा गया है इसलिए यहाँ प्रयास नहीं किया गया । यहाँ तक के वर्णन से कला का स्वरूप कहा गया ॥ ११ ॥

प्रश्न—ऐसा हो जाय इसमें हमें कोई विप्रतिपत्ति नहीं है । किन्तु शक्ति पर्यन्त ही अण्ड क्यों कहा गया व्यापिनी आदि में क्यों नहीं?—यह शङ्का कर कहते हैं—

लोग भुवनों के विभाग की स्थिति के कारणभूत आवरण को अण्ड कहते हैं और वह (आवरण) शक्ति पर्यन्त ही है ॥ -१२-१३- ॥

वह = आवरण ॥ १२ ॥

प्रश्न—यहाँ (= शक्ति में) भुवनों की विभागपूर्वक स्थिति है और उसका कारण अण्डरूप आवरण नहीं है—यह कथन तो अपूर्व (= परस्पर विरोधी) है—यह कहते हैं—

यद्यपि पहले शिव नामक तत्त्व में भी भुवनपद्धति कही गयी तथापि

**उक्ता तथाप्यप्रतिघे नास्मिन्नावृतिसंभवः ।**

'शिवाख्येऽपि तत्त्वे' इति तात्स्थ्यात् व्यापिन्यादावपि—इत्यर्थः । 'अप्रतिघे' इति विश्वोत्तीर्णतया शून्यरूपत्वात्, आवृत्यभावे चायमेव विशेषणद्वारेण हेतुः ॥ १३ ॥

ननु प्रतीघातो नाम मूर्तधर्मो मूर्तत्वं च पृथिव्यामेव संभवेत्, ततश्च तामपहायान्यत्राण्डस्य संभवो न न्याय्यः—इत्याह—

**नन्वेवं धरणीं मुक्त्वा शक्तौ प्रकृतिमाययोः ॥ १४ ॥**
**अपि चाप्रतिघत्वेऽपि कथमण्डस्य संभवः ।**
**अत्रास्मद्गुरवः प्राहुर्यत्पृथिव्यादिपञ्चकम् ॥ १५ ॥**
**प्रत्यक्षमिदमाभाति ततोऽन्यन्नास्ति किञ्चन ।**
**मेयत्वे स्थूलसूक्ष्मत्वान्मानत्वे करणत्वतः ॥ १६ ॥**
**कर्तृतोल्लासतः कर्तृभावे स्फुटतयोदितम् ।**
**त्रिंशत्तत्त्वं विभेदात्म तदभेदो निशा मता ॥ १७ ॥**
**कार्यत्वकरणत्वादिविभागगलने सति ।**
**विकासोत्कस्वतन्त्रत्वे शिवान्तं पञ्चकं जगुः ॥ १८ ॥**

यतः प्रत्यक्षसिद्धात्पृथिव्यादिपञ्चकादन्यत् किञ्चिन्नास्ति, तद्भित्त्यवलम्बनेनैव

---

अप्रतिघ इस (शिव) में आवरण सम्भव नहीं है ॥ -१३-१४- ॥

शिव नामक तत्त्व में भी = उसमें स्थित होने से व्यापिनी आदि में भी । अप्रतिघ = विश्वोत्तीर्ण होने के कारण शून्यरूप होने से (शिव अप्रतिघ हैं) । आवरण के अभाव में यही विशेषण के द्वारा कारण है ॥ १३ ॥

प्रश्न—प्रतिघात मूर्त्त (पदार्थ) का धर्म है और मूर्त्तत्व पृथिवी में ही सम्भव है । फिर उस (पृथिवी) को छोड़कर अन्यत्र अण्ड की उत्पत्ति उचित नहीं है—यह कहते हैं—

पृथिवी को छोड़कर शक्ति प्रकृति एवं माया के भी अप्रतिघ होने पर भी अण्ड की उत्पत्ति कैसे है? इस विषय में हमारे गुरु कहते हैं कि जो यह पृथिवी आदि पाँच तत्त्व आभासित होते हैं उससे अतिरिक्त कुछ नहीं है । स्थूल सूक्ष्म होने के कारण मेय होने, करण होने के कारण प्रमाण में प्रमाता होने एवं कर्त्तृता के उल्लास के कारण तीस तत्त्व स्पष्ट रूप से भेदात्मक कहा गया । उनका अभेद माया कही गयी है । कार्यत्व करणत्व आदि के विभाग के विगलित होने पर (अहन्ता के) विकास की उत्कलिका की स्वतन्त्रता में शिवपर्यन्त पाँच की व्याप्ति कही गयी है ॥ -१४-१८ ॥

क्योंकि प्रत्यक्षसिद्ध पृथिवी आदि पाँच से अतिरिक्त दूसरा कुछ नहीं है अर्थात्

निखिलस्य विश्वस्योदयः इत्यर्थः । यतोऽस्य मेयत्वे सति उक्तहेतुपञ्चकबलात् त्रिंशतस्तत्त्वानां विभेदेनोदयः । तथा च स्थूलसूक्ष्मरूपं पृथिव्यादीनां पञ्चकद्वयमेतद्रूपमेवेति तावन्नास्ति विप्रतिपत्तिः, ज्ञानांशस्पर्शात्प्रमाणरूपम् बुद्धीन्द्रियपञ्चकमप्येतन्मूलमेव । नहि मेयमपहाय मानत्वं नाम किञ्चिद्भवेत्—इति भावः । कर्त्रंशस्पर्शात् करणरूपम् कर्मेन्द्रियपञ्चकमप्येतदालम्बनमेव, कार्यमन्तरेण करणत्वायोगात् कर्तृत्वे च कार्यविषयमेव भवेत्—इति मनःप्रभृति तत्त्वपञ्चकमप्येवम्, अन्यथा हि कर्तृत्वमेव नोल्लसेत् । यद्यप्यन्तःकरणत्रयं करणपक्षनिक्षिप्तमेव तथापि कर्तुरन्तरङ्गत्वाद् बहिष्करणद्वारेण च बाह्यविषयसंस्पर्शादिवमुक्तम् । प्रकृतेश्च बुद्ध्यादिकर्त्रुपकरणकारणत्वात्पारम्पर्येण कर्तृतोल्लासकत्वमित्येवमभिधानम् । एवं नियत्यादिकञ्चुकपञ्चकमपि

'अधुनैव किञ्चिदेवेदमेव सर्वात्मनैव जानाति ।'

(पर०सा० १७ श्लो०)

इत्याद्युक्तयुक्त्या कर्तृत्वस्यैवोपोद्बलत्वात् तदवलम्बनमेवेति । नन्वेवं मायादि ततोऽन्यत्स्यात्?—इत्याशङ्क्याह—'तदभेदः' इत्यादि । तच्छब्देनात्र पृथिव्यादीनां परामर्शः । एतदभेदे च कार्यस्य सूक्ष्मेण रूपेणावस्थानं भवेत्—इति भावः । विकासोत्केति, यथायथमिदन्तायाः सङ्कोचेनाहन्तायाः समुल्लासात्, इदन्तायाश्च

---

उसी भित्ति पर समस्त विश्व का उदय होता है । क्योंकि उसके मेय होने पर उक्त पाँच हेतुओं के बल से तीस तत्त्वों का भेदपूर्वक उदय होता है । पृथिवी आदि के पाँच-पाँच स्थूल सूक्ष्म रूप इसी के रूप में है इसमें (किसी को भी) एतराज नहीं है । ज्ञानांश के स्पर्श के कारण प्रमाणरूप पाँच ज्ञानेन्द्रियों (की सत्ता) भी इसी के कारण हैं । प्रमेय के अभाव में प्रमाण नाम की कोई चीज नहीं होती । कर्मांश के स्पर्श से करणरूप पाँच कर्मेन्द्रियाँ भी एतदालम्बक (= पृथिव्याद्यालम्ब वाली) ही हैं। कार्य के विना करण नहीं होता और कर्त्तृत्व भी कार्यविषयक ही होता है इसलिए मन आदि पाँच तत्त्व भी ऐसे ही हैं अन्यथा कर्त्तृत्व उल्लसित ही नहीं होगा । यद्यपि तीनों अन्तःकरण करण ही माने गए हैं तो भी कर्त्ता के अन्तरङ्ग होने और बाह्यकरण के द्वारा बाह्यविषय का स्पर्श होने, के कारण ऐसा कहा गया। और प्रकृति बुद्धि आदि कर्त्ता के उपकरण का कारण होने से परम्परया कर्त्तृता की उल्लासिका है इसलिए ऐसा कहा गया । इसी प्रकार नियति आदि पाँच कञ्चुक भी

"इसी समय, कुछ ही, यही, पूर्णरूप से ही जानता है ।"

इत्यादि उक्त युक्ति से कर्त्तृत्व का ही उपोद्बलक होने से उसके अवलम्बन वाला ही है । प्रश्न—इस प्रकार माया आदि उससे भिन्न हो जायेंगे?—यह शङ्का कर कहते हैं—तदभेद' । यहाँ 'तत्' शब्द से पृथिवी आदि को मानना चाहिए । इससे अभिन्न होने में कार्यत्व आदि विभाग का विगलित हो जाना कारण है । कार्य

संकुचन्त्या अपि मेयनिष्ठत्वं निर्विवादमेवेति युक्तमुक्तमस्मद्गुरुभिः—'पृथिव्यादिपञ्चकादन्यत् किञ्चिन्नास्ति' इति ॥ १८ ॥

न च स्वोपज्ञमेवैतदुक्तम्—इत्याह—

**श्रीमत्कालोत्तरादौ च कथितं भूयसा तथा ।**
**पञ्चैतानि तु तत्त्वानि यैर्व्याप्तमखिलं जगत् ॥ १९ ॥**

तदेवाह—पञ्चेत्यादि । एतानीति पृथिव्यादीनि । यदुक्तं तत्र—

'पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।' इति॥ १९ ॥

अत एव सद्योजातादेरप्येषैव व्याप्तिः सर्वत्रोच्यते—इत्याह—

**पञ्चमन्त्रतनौ तेन सद्योजातादि भण्यते ।**
**ईशानान्तं तत्र तत्र धरादिगगनान्तकम् ॥ २० ॥**

तेनेति पृथिव्यादीनामेवोक्तेन जगद्व्यापकत्वेन हेतुना, तत्र तत्र श्रीकालोत्तरादौ । यदुक्तं तत्र—

'सद्यस्तु पृथिवी ज्ञेया वामो ह्यापः प्रकीर्तिताः ।

---

कारण में सूक्ष्म रूप से स्थित रहता है—यह भाव है । विकासोत्क—क्रमशः इदन्ता के सङ्कोच होने से अहन्ता के समुल्लास के कारण । संकुचित होने पर भी इदन्ता की मेयनिष्ठता सर्वसम्मत है । इस प्रकार हमारे गुरुओं ने ठीक ही कहा है 'पृथिवी आदि पाँच के अतिरिक्त कुछ नहीं है ॥ १८ ॥

यह स्वोपज्ञ (= अपनी बुद्धि से) नहीं कहा गया—यह कहते हैं—

कालोत्तर आदि में इस प्रकार बहुत बार कहा गया है कि ये पाँच तत्त्व हैं जिनके द्वारा समस्त जगत् व्याप्त हैं ॥ १९ ॥

वही कहते हैं—पाँच इत्यादि । ये = पृथिवी आदि । जैसा कि वहाँ (= कालोत्तर आदि मे) कहा गया है—

"पृथिवी जल तेज वायु और आकाश" ॥ १९ ॥

इसीलिए सद्योजात आदि की भी यही व्याप्ति सर्वत्र कही जाती है—यह कहते हैं—

इसलिए पञ्चमन्त्रतनु नामक ग्रन्थ में सद्योजात से लेकर ईशान पर्यन्त की व्याप्ति उन-उन ग्रन्थों में पृथिवी से लेकर आकाश तक कही जाती हैं ॥ २० ॥

इस कारण—पृथिवी आदि के ही उक्त जगद्व्यापकत्व के कारण । वहाँ-वहाँ = कालोत्तर तन्त्र आदि में । जैसा कि वहाँ कहा गया—

अघोरस्तेज इत्युक्तं वायुस्तत्पुरुषः स्मृतः ॥
आकाशस्तु भवेदीशः स्वयं देवो महेश्वरः । इति ।

श्रीपरेऽपि

'सद्यः क्षितिर्जलं वामोऽघोरस्तेजो नरो मरुत् ।
ईशः खं.........................................॥' इति ॥ २० ॥

एवं शक्त्यन्तमेव यावदावरणं संभवतीत्युपपादितम्, ततश्च व्यापिन्यादावावरणं नास्ति—इत्याह—

**शिवतत्त्वमतः शून्यातिशून्यं स्यादनाश्रि(वृ)तम् ।**

'अतः' इति शक्त्यन्तमेव यावदावरणस्य संभवात् । शून्यातिशून्यमिति, 'शून्यात्' व्यापिन्यादिपदाद्भावसंस्कारस्यापि प्रक्षयादतिशून्यं षट्त्रिंशं तत्त्वम्—इत्यर्थः । अत एवावरणविगमात् 'अनावृतम्'—इत्युक्तम् । ततश्च नात्राण्डव्यपदेशः—इति युक्तमुक्तं शक्त्यन्तं यावदण्डत्वमिति ॥

नन्वेवं विश्वोत्तीर्णमेव षट्त्रिंशं तत्त्वमित्युक्तं भवेत्, ततश्च स्वतन्त्रबोधैकरूपम् विश्वमयं परं तत्त्वमिति रिक्ता वाचोयुक्तिः स्यात् ?—इत्याशङ्क्याह—

**यत्तु सर्वाविभागात्म स्वतन्त्रं बोधसुन्दरम् ॥ २१ ॥**

---

"सद्योजात को पृथिवी, समझना चाहिए । जल वामदेव कहा गया है । अघोर को तेज कहा गया है । तत्पुरुष को वायु माना गया है । देव महेश्वर ईश स्वयं आकाश है ।"

परतन्त्र शास्त्र में भी—

"सद्योजात क्षिति, वामदेव जल, अघोर तेज, तत्पुरुष वायु और ईशान आकाश है" ॥ २० ॥

शक्तिपर्यन्त ही आवरण सम्भव है—यह कहा गया । इस कारण व्यापिनी आदि में आवरण नहीं है—यह कहते हैं—

इस कारण शून्यातिशून्य शिवतत्त्व अनावृत है ॥ २१- ॥

इस कारण = शक्तिपर्यन्त ही आवरण सम्भव होने से । शून्यातिशून्य = शून्य = व्यापिनी आदि पद से भावसंस्कार के भी नष्ट हो जाने से अतिशून्य छत्तीसवाँ तत्त्व । इसीलिए आवरण के हट जाने से 'अनावृत' कहा गया । इसलिए इसे 'अण्ड' नहीं कहते । इसलिए ठीक कहा गया—अण्डों की स्थिति शक्तिपर्यन्त है ॥

प्रश्न—इस प्रकार विश्वोत्तीर्ण ही छत्तीसवाँ तत्त्व कहा जाना चाहिए था फिर केवल स्वतन्त्रबोधस्वरूप विश्वमय परमतत्त्व है—यह कथन व्यर्थ है?—यह शङ्का कर कहते हैं—

**सप्तत्रिंशं तु तत्प्राहुस्तत्त्वं परशिवाभिधम् ।**

इह खलु विश्वोत्तीर्णत्वेऽपि विश्वमयमेकमेव रूपम् स्वतन्त्रबोधात्मकं परं तत्त्वं यत् सर्वत्र षट्त्रिंशं तत्त्वमित्युद्घोष्यते । तत्र चाविद्यापदपतिताः प्रतिपत्तारो विप्रतिपद्यन्ते—यदेकस्मिन्नेव रूपे कथं विरुद्धधर्मसंसर्गः स्यादिति, यदभिप्रायेणैवं-तद्रूपमतः पृथक्कृत्योक्तम्—सप्तत्रिंशमिति । नहि वस्तुतः किञ्चिदेवं तत्त्वं संभवति, तथात्वे हि 'षट्त्रिंशत्तत्त्वमुखानि' इत्यादिश्रुतिविरोधः स्यात् । न चैवमत्र कश्चिद्विरोधः, स ह्युभयवस्त्वधिष्ठानो भवेत् । न चात्रैकमपि वस्तु संभवति, नहि परं तत्त्वमधिकृत्य विश्वमेव नाम किञ्चिद्वस्तु सदस्ति यदुत्तीर्णत्वेन यन्मयत्वेन चात्र विरोधः परापतेत् । तस्मात् षट्त्रिंशस्यैव तत्त्वस्य सर्वाविभागात्मत्वाद्यात्मकमेकं रूपम् सप्तत्रिंशत्वेन परिकल्पितं भेदात्तान् प्रमातॄन् प्रत्येवमुपदेशात् ॥ २१ ॥

नन्वेवमस्तु को दोषः, एतस्यापि रूपस्य भावनोपदेशादौ पुनर्यदा वेद्यभावः परिकल्प्यते तदा कस्य प्रमातृत्वं स्यात् ?—इत्याशङ्क्याह—

**तस्याप्युक्तनयाद्वेद्यभावेऽत्र परिकल्पिते ॥ २२ ॥**
**यदास्ते ह्यनवच्छिन्नं तदष्टात्रिंशमुच्यते ।**

---

जो कि सर्वाविभागरूप स्वतन्त्रबोधसुन्दर है, परमशिव नामक उसको सैंतीसवाँ तत्त्व कहा गया है ॥ -२१-२२- ॥

विश्वोत्तीर्ण होने पर भी स्वतन्त्रबोधरूप विश्वमय एक ही रूप पर तत्त्व है जो कि सर्वत्र छत्तीसवाँ तत्त्व कहा जाता है । इस विषय में अविद्याग्रस्त वेत्ता लोग सन्देह करते हैं कि एक ही रूप में (दो) विरुद्ध धर्म का सम्बन्ध कैसे होगा ? इसी अभिप्राय से इस रूप को इससे अलग कर सैंतीसवाँ (तत्त्व) कहा गया । वस्तुतः इस प्रकार का कोई तत्त्व नहीं होता । क्योंकि वैसा होने पर 'षट्त्रिंशत् तत्त्वमुखानि' इत्यादि श्रुति से विरोध हो जायगा और यहाँ कोई विरोध है नहीं । वह (= परमेश्वर) दोनों प्रकार की वस्तुओं का अधिष्ठान है । (सच पूछा जाय, तो) इसमें एक भी वस्तु सम्भव नहीं है । परतत्त्व को आधार मानकर विश्व नामक कोई वस्तु सत् है ही नही जिससे परे (= रहित) या जिससे युक्त होने से यहाँ विरोध आए । इसलिए छत्तीस ही तत्त्व का सर्वाविभागात्मकत्वरूप एक ही स्वरूप सैंतीसवें के रूप से कल्पित हुआ क्योंकि भेद के कारण उन प्रमाताओं के प्रति वैसा उपदेश किया जाता है ॥ २१ ॥

प्रश्न—ऐसा हो जाय क्या हर्ज है । इस रूप की भी भावना या उपदेश आदि होने पर जब वेद्यभाव की परिकल्पना की जायगी तब कौन प्रमाता होगा?—यह शङ्का कर कहते हैं—

उक्ति रीति से यहाँ उसको भी वेद्य मानने पर जो अनवच्छिन्न रहता है वह अड़तीसवाँ (तत्त्व) कहा जाता है ॥ -२२-२३- ॥

उक्तनयादिति, 'स्वातन्त्र्यात्तु निजं रूपम्' (त०आ० ११।१०) इत्यादिरूपात् । यदिति विश्वोत्तीर्णाद्यपेक्षया तृतीयं रूपम्, वस्तुतो हि विश्वोत्तीर्णत्वादिरूपत्वेऽपि स्वतन्त्रबोधः परमार्थः—इत्यादिनीत्यानवच्छिन्नं बोधमात्रमेवास्य परं रूपम् यदष्टात्रिंशमिति परिकल्प्यते ॥ २२ ॥

नन्वेवं तस्यापि वेद्यत्वपरिकल्पनेऽन्यः प्रमाता कल्पनीयस्तस्याप्यन्य इत्यनवस्था स्यात् ?—इत्याशङ्क्याह—

**न चानवस्था ह्येवं स्याद् दृश्यतां हि महात्मभिः ॥ २३ ॥**

एतदेव दर्शयति—

**यद्वेद्यं किञ्चिदाभाति तत्क्षये यत्प्रकाशते ।**
**तत्तत्त्वमिति निर्णीतं षट्त्रिंशं हृदि भासते ॥ २४ ॥**

'तत्क्षये' इति तस्य समनान्तस्य वेद्यस्य । यदिति वेदकैकरूपम्, प्रकाशते इत्ययत्नमेव सर्वेषां साक्षात्कृतं भवेत्—इत्यर्थः । यदाहुः—

'नाथ वेद्यक्षये केन न दृश्योऽस्येकको भवान् ।'
(उ० स्तो० १।८) इति ।

षट्त्रिंशमिति, विश्वोत्तीर्णं रूपम्—इत्यर्थः ॥ २४ ॥

---

उक्त रीति से—'स्वातन्त्र्य के कारण अपने रूप को...' इत्यादि रूप । जो—विश्वोत्तीर्ण आदि की अपेक्षा तृतीयरूप । वस्तुतः तो विश्वोत्तीर्णत्व आदि रूप होने पर भी स्वतन्त्रबोध परम अर्थ है—इत्यादि नीति से अनवच्छिन्न बोध मात्र ही इसका परम रूप है जो कि अड़तीसवाँ माना जाता है ॥ २२ ॥

प्रश्न—उस (= अड़तीसवें) के भी वेद्य मानने पर दूसरे प्रमाता की कल्पना करनी पड़ेगी फिर उसका भी दूसरा... और इस प्रकार अनवस्था हो जायगी?—यह शङ्का कर कहते हैं—

इस प्रकार अनवस्था नहीं होगी । महात्मा लोग देखें (= उच्च साधक इसका रहस्य जानते हैं) ॥ -२३ ॥

इसी को दिखलाते हैं—

जो कुछ वेद्य भासित होता है और उसका नाश होने पर जो प्रकाशित होता है वह छत्तीसवाँ तत्त्व स्वीकृत होकर हृदय में भासित होता हैं ॥२४॥

इसका क्षय होने पर—उसका = समनान्त वेद्य का । जो = मात्र वेदकरूप । प्रकाशित होता है = विना प्रयास के सबको साक्षात् दिखलायी पड़ता है । जैसा कि कहते हैं—

"हे स्वामी ! वेद्य का नाश होने पर आप एक किसके द्वारा दृश्य नहीं होते।"

नन्वेवमस्य किं विश्वविविक्ततैव रूपमुतान्यत्किञ्चित्तदतिरिक्तम् ?—तदाह—

**तत्किं न किञ्चिद्वा किञ्चिदित्याकाङ्क्षावशे वपुः ।**

तत्राद्यः पक्षो दूरापेतः, नहि घटाभाव एव पटस्य रूपम् भवितुमर्हति; अतश्चैतदनागूर्यैव पक्षान्तरं दर्शयति—

**चिदानन्दस्वतन्त्रैकरूपं तदिति देशने ॥ २५ ॥**
**सप्तत्रिंशं समाभाति तत्राकाङ्क्षा च नापरा ।**

तत्र चिता बोधसुन्दरत्वमानन्दे(न)च सर्वाविभागात्मत्वमुक्तम् । शक्तिदशायामेव हि विश्वमविभागेन भवेत्—इति भावः । एवमुपदेशे च षट्त्रिंशदतिरिक्तं रूपमुपदिष्टं भवेदित्युक्तम्—'इति देशने सप्तत्रिंशं समाभाति' इति । नहि यदेव विश्वोत्तीर्णं तदेव विश्वमयं भवितुमर्हति—इत्युक्तप्रायम् । एवं चास्य चिदानन्दे-त्यादिना साक्षात्तात्त्विकं रूपमुक्तम—इत्यत्रान्यत् किञ्चिदाकाङ्क्षणीयं नास्ती-त्युक्तम्—तत्राकाङ्क्षा च नापरेति ॥ २५ ॥

एवमुपदेश्यत्वादेव वेद्यभावः पुनरवस्थितः—इत्यस्य केनचिद्वेदकेन भाव्यम्, स एव पुनः कतरः ?—इत्याशङ्क्याह—

---

छत्तीसवाँ = विश्वोत्तीर्णरूप ॥ २४ ॥

प्रश्न—विश्व से अलग होना ही इसका रूप है या उसके अतिरिक्त दूसरा कुछ?—यह कहते हैं—

वह क्या कुछ नहीं है अथवा कुछ है इस आकाङ्क्षा के होने पर उसके शरीर (= रूप, की कल्पना होती) है ॥ २५- ॥

इसमें पहला पक्ष दूर चला गया । घटाभाव पट का रूप नहीं होता । इसलिए उसका विचार न कर दूसरे पक्ष को दिखलाते हैं—

वह चिदानन्द स्वतन्त्रैकरूप है—ऐसा उपदेश होने पर सैंतीसवाँ रूप आभासित होता है । फिर उसमें कोई आकाङ्क्षा नहीं होती ॥-२५-२६-॥

(उक्त कथन में) चित् के द्वारा बोधसुन्दरता और आनन्द से सर्वाविभागात्मता कही गयी है । अर्थात् शक्ति दशा में ही विश्व अविभक्त रहता है । और ऐसा उपदेश होने पर छत्तीस से अतिरिक्त रूप उपदिष्ट होता—यह कहा गया—'ऐसा उपदेश होने में सैतीसवाँ (तत्त्व) प्रतीत होता है । जो विश्वोत्तीर्ण है वही विश्वमय है—ऐसा नहीं हो सकता—यह कह दिया गया है । इस प्रकार चिद् आनन्द इत्यादि के द्वारा इसका साक्षात् तात्त्विक रूप कहा गया । इस विषय में दूसरे किसी की आकाङ्क्षा नहीं है—यह कहा गया—वहाँ दूसरी आकांक्षा नहीं है ॥ २५ ॥

प्रश्न—उपदेश्य होने के कारण ही इसका वेद्यभाव पुनः स्थित हो गया—फिर

